


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ प्र०) भारतम्

संपुटः ६ | 15 JANUARY 1968 | क्रमांकः १



प्लवङ्गमार्गशीर्षांकः ]

शकवर्षः १८८९

[ मूल्यम् ४० पैसाः

# विषयसूचिका








# भारतभारति !

सुरभारति वरभारति भारतभारति !
क्वासि त्वं भाषाविवादे ? कासि त्वं भाषाविवादे ? ॥

त्वमांगल्यसि त्वं हिन्द्यसि
त्वं आंध्रयसि त्वं द्राविड्यसि
त्वं कन्नड्यसि त्वं केरल्यसि
त्वं महाराष्ट्रयसि त्वं कोंकण्यसि ॥ ॥ सुरभारति ॥

त्वं घूर्जरी त्वमुत्कली
त्वं बंगाली वं पंजाबी
त्वं सिन्ध्यसि त्वं नेपाल्यसि
त्वमुर्दूरसि त्वं राजस्थान्यसि ॥ ॥ सुरभारति ॥

किं अन्तर्लीना किं बहिर्निष्कासिता ?
किं पूजिता किं वापमानिता ?
सन्ति ते सुपुत्राः केचिज्जननि !
करिष्यन्ति ते ते सेवां हे जननि ! ॥ ॥ सुरभारति

# सम्पादकीयम्

## भभावल्यामन्तकस्सान्निविष्टः

जनाश्चिन्तयन्ति सुखं मे भूयात दुःख इतरस्येति । परन्तु सुखदुःखे अनियते शुक्लकृष्णपक्षाविव अहोरात्रमिव पर्यायेण प्रवर्तेते एव। कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा । अपि च अन्यथा चिन्तितं कार्यं दैवमन्यत्र चिन्तयेत् । न हि मानवसंकल्पानुगुणतयैव कार्याणि फलन्ति, कानिचन फलन्ति चेत्तत्र दैवमेव कारणं न पौरुषम् । अन्यथा केषुचित्कार्येषु असिद्धिः अन्यथा सिद्धिर्वा न घटेत

अत्र भारतस्वातंत्र्यसंपादनविषये अस्माभिरेवमेवानुभूयते । स्वातन्त्र्यपिपासया धवलप्रभूणां उच्चाटने अतीव प्रयतितं बहूनि क्लेशानि अनुभूतानि च । तथापि ते अपसर्तुं नैवऽवांछन् ! किन्तु अस्माभिरनभ्यूहितविधया ते पलायिताः । किंतु अनभ्यस्तपालनानां अस्माकं च सा परिस्थितिः न केवलमाश्चर्यंजननी अपितु अननुभाव्या चासीत । पाकस्थानविवादः जननाशः तेन च महानासीत् । तेन प्रजाभिश्चिन्तितम् – एतादृशस्य स्वातन्त्र्यस्य अलाभ एव वरमिति । कथंकथमपि, प्रशमिते तस्मिन् दावानले रजाकरोत्पाताः व्याप्नुवन् । तेषु च निवारितेषु काश्मीरविवादः । तस्मिन् तदवस्थ एव भाषाराष्ट्रविवादाः । तेषु यथाकथंचित विरोपितेषु जातीयभाषाविवाद इति महती अनर्थपरंपरा अभिवर्तते ।

आंग्लराजकनिर्मूलनाय यानि कर्माण्याचरितानि तान्येवाद्य सर्वकारप्राणांतकान्यावर्तन्ते । तदा विद्यार्थिनां प्रोत्साहदानेन बहूनि कार्याणि निर्व्यूढानि ।

तस्मादधुना च विविधराजकीयनायकैः प्रोत्साहिताः उत्साहमात्रसाराः, विद्यार्थिनः असन्दर्भेपि संप्रविश्य कार्यालयध्वंसं यानप्रणाशनं प्रजाधनसौकर्यविध्वंसं च रचयन्ति। नायकानामपि ते अनुपसंहार्या भवन्ति ते कदाचित् अश्वत्थाम्नो ब्रह्मास्त्रमिव ।

एवमेव कार्मिका अपि पूर्वाधीतविद्याः प्रसारयन्ति परितः स्वनैपुण्यं पदे पदे । फलतः कर्मागाराणि निरुध्यन्ते वस्तुनिष्पादनं च प्रतिहन्यते हाहाकारश्च देशे प्रवर्धते । सर्वत्र सर्वदा च बन्धाः संधाः च प्रवर्तन्ते । एवं च न वैयक्तिक-कर्मागाराणां संस्थानानामेव केवलं अपितु सर्वकारीयाणामपि च तेषां महती क्षतिः अनुभूयते । तदनुनयाय च शासनानि कल्पितानि सर्पेभ्यः क्षीरदानमिव तानुत्तेज-यन्त्येव केवलम् ।

कृषकाणां साहाय्यार्थं संस्थानानां श्रोत्रियक्षेत्राणां मान्यक्षेत्राणां च विनाशाय च परिकल्पितं शासनं तावन्मात्रेण न विश्रान्तं अपितु शासनान्तरकारणं सत् भूस्वामिनोपि विनाशयिष्यत्येव ।

भाटकदातुरेव गृहं, पेटिकावाहकस्यैव पेटिका, कृषकस्यैव क्षेत्रम्, लावक-स्यैव धान्यं, कर्मिण एव कर्मागारः, आक्रामकस्यैव देशः स्थलं वा इति वादाः प्रबलाः प्रसार्यन्ते ।

एवं अनर्थपरंपरायां प्रभवो गताः, तत्प्रतिनिधयो गताः, तत्स्थानं च कर्षकाश्चाक्रमन्त इदानीम् । परन्तु अचिरेणैव तत्स्थानं कार्मिका एव आक्रंस्यन्ते ।

भट्टिर्नष्टो भारवीयोपि नष्टो भिक्षुर्नष्टो भीमसेनोपि नष्टः ।
भुक्कुण्डोहं भूपतिस्त्वं हि राजन् भब्भावल्कामन्तकास्सन्निविष्टः ॥

श्रीः

# सुस्वागतं हि कुरुते सुतरामभिज्ञाः!

**रचयिता — पि. यम्. पद्मनाभशर्मा, तञ्जावूरु.**



पुरा पुरारातिनिदेशतस्सुराः वरीतुमिन्द्रं पुरुषोत्तमद्वयम् ।
अतोल्यस्तत्र लघुस्सुरालयं गतो गुरुस्त्वत्र महीतलं गतः ॥

स एव राजा शरभोजिनामा दिगन्तविश्रान्तविशिष्टकीर्तिः ।
भूमण्डलं भोगसुधार्णवाप्तं कृत्वा दिवं जेतुमपीह मेने ॥

तञ्जापुरे मंडितपंडितौघे सस्यादिभिस्सौख्यनिधानभूते ।
यत्र द्विजैस्सागमवेदघोषैः कृतायते कीर्तियुतैः कलिर्हि ॥

संस्थापयामास महार्घरत्नैः सुकल्पकल्पैस्सुरधेनुदेश्यैः ।
सर्वेष्टदं सर्वकलानिदानं "सरस्वतीसद्म" विशिष्टकोशैः ॥

भाषादिभिर्भिन्नतरा अपीह परस्परं सम्मिलिता हि कोशाः ।
महाजनान्द्वेष्ययुतान्स्वनाम्ना समाह्वयन्त्यत्र विचित्रमेतत् ॥

व्यासेन वल्लुवसुधीर्हसतीह मोदात्
वाल्मीकिनाऽमृतगिरा गिरतीह "कम्बः" ।
संभाषते तुलसिना सह कालिदासः
श्रीकृष्णदेवकविराट्कृतवागि "लङ्गोः" ॥

* "वेमनो वामनेनात्र शङ्करो देशिकेन तु ।
विना भेदं विना वादं संगिरन्ते परस्परम् ॥

---

वल्लुवर, कम्बन्, इलंगो इति प्रसिद्धद्राविडकवयः

गैर्वाणी द्राविडी चान्ध्री महाराष्ट्री च केरली ।
हिन्दी पार्सीति भाषास्तास्सम्मिलन्तीह मातृवत् ॥

भारतस्याऽस्य देशस्य चैकमत्यं हि शाश्वतम् ।
दीर्घदर्शी दर्शयितुं शरभोजी व्यधादिदम् ॥

भो भो मानुष निर्वृतिं विचिनुषे क्षेत्राटनं किं वृथा
त्वामत्राह्वयति द्रुतं शरभजीसंस्थापितं केतनम् ।

कोशैः कुड्मलसन्निभैः परिवृतं सारस्वतं शान्तिदं
अत्रागत्य निषेव्यतां तदुदितं निर्वाणमप्यायताम् ॥

आकाशवाणीवाणीस्ताः कोशागरप्रशंसिनीः ।
श्रावं श्रावमभूवंस्ते सन्तुष्टमनसो जनाः ॥

केचिच्छ्रुत्वा भेजिरे पत्रजातं केचित्तुष्टाश्चक्रिरे धन्यवादान् ।
केचित्तुष्टा ऊचिरे स्वागतानि केचिद्द्रोलां लेभिरे द्रष्टुकामाः ॥

सरस्वतीमहागारसेवकश्शुभचिन्तकः ।
स्वागतं कुरुते नित्यं पण्डितश्शान्तिकांक्षिणः ! ॥



## आपणः ६.

अयं ग्रन्थापणः। अत्र बहूनि पुस्तकानि वर्तन्ते। कतिचन मुद्रितानि कतिचनामुद्रितानि, कानिचन रेखितानि कानिचन शुद्धानि अत्र विक्रीयन्ते च। गणनपुस्तकानि आयव्ययधारारेखालसितानि वर्तन्ते। लेख्यपुस्तकानि तु तिर्यग्रेखामात्रकलितानि भवन्ति। सर्वाणि च तानि दृढेन दृढतरेण दृढतमेन वा कवचेन उभयतो बद्धानि रंजयन्ति मानसम्। एतानि च विविधपरिमाणेषु वर्तन्ते। अर्धक्रावणकानि पादक्रावणकानि लघुक्रावणकानि कलाक्रावणकानि इत्येव विविधानि तेषां परिमाणानि। अरेखानि शुद्धानि च कानिचिद्भ्रियन्ते यत्र विद्यार्थिनः रेखाचित्राणि रचयन्ति। कानिचन यमलरेखानि वर्तन्ते यत्र च बाला प्रतिलिपिं साधयन्ति।

अत्र लेखन्यो बहुविधा वर्तन्ते याभिः पत्रे द्रुततरं लिखितुं अशुद्धं च घर्षण्या शोधयितुं च शक्यते। सीसकमुखे च तस्या लेखनेन अवसिते त्रुटिते वा छुरिकया विलिख्य श्लक्ष्णीकर्तुं अवकाशो विद्यते। पश्य अत्र धारालेखिनी वर्तते। अस्यां गर्भः मुख जिह्वा द्विदलिका शीर्षकमिति अंगानि भवन्ति। गर्भे मषीद्रवः पूर्यते, मुखेन रेखाभ्रमिभीः पिधीयते। मुखान्तर्भागे जिह्वापरिरंध्रद्वारा द्विदलिकाग्रमनुसृत्य लेखनकाले पतन्ति। शीर्षकं च अलेखनसमये मुख पिनद्धि, लेखनसमये तु गर्भपृष्ठमनुभूषयति। लेखनवेलायां मष्या अधिकस्रावे चूषण्या मषीं चूषयन्ति लेखकाः। अत्रैव कार्बनपत्राणि लभ्यन्ते येषां उपयोगेन एकवारलेखनेनैव द्वित्रीचतुर्मूर्तीराविर्भावयितुं पार्यते। अंगुलिमुद्रकाणां कार्बनपत्राणि बहूपकुर्युः। एता मार्केटिकाः (क्लिपः)। एताः पत्राणि सुदृढं अविचलं च गृह्णन्ति। एता फलकिकाः अत्र पुस्तकं पत्रं वा संस्थाप्य सुखं लिखन्ति बालाः। एषा साधनपेटिका। अत्र गणितोपयोगीनि बहूनि साधनानि वर्तन्ते। कोणमितिः कुण्डलिनी मानिनी इत्यादयः तत्र वर्तन्ते। तत्सहाय्येन खगोलभूगोलक्षेत्रादिगणनाः सुलभं सुसूक्ष्मं च साधयितुं शक्यते। एषा मषीकूपिका। एवमेव बहूनि आपणिकमाणवकप्रभृतीनां समेषामुपयुक्तानि वस्तन्यत्र वर्तते। पार्श्वेत एव पश्य अत्र मुद्रितानि बहूनि पुस्तकानि बहुभाषामयानि च वर्तन्ते। अत्र च काव्यानि नाटकानि चरित्राणि पुराणानि शास्त्राणि कथाः उपाख्यानानि नवला एवमादीनि वर्तन्ते विक्रीयन्ते च॥

# संस्कृतवाङ्मये विज्ञानविशेषाः

## ले० पिडपर्ति शेषाचलशास्त्री

### भगवद्गीताया 15 अध्यायः

ममैवांशो जीवलोके जीवभूतस्सनातनः ।
मनष्षष्ठाणींद्रियाणि प्रकृतिस्थानि कर्षति ॥ ॥७॥

वैज्ञानिकार्थ :– जीवलोके=प्राणिलोके, जीवभूतः=प्राणभूतः, सनातनः= निश्चलः, मम=कृष्णाभिन्नत्वेनाध्यवसितायाः अयस्कान्तशक्तेः, अंशः=एकदेश एव, प्रकृतिस्थानि=प्राणिषु विद्यमानानि, मनःषष्ठानि = मनसा समेत्य षट्संख्याकानि, इंद्रियाणि=त्वगादिकानि, कर्षति= आकर्षति ।

तात्पर्यम् :- भगवतः अयस्कान्तस्य शक्तिरेव अंशतः लोके जीवत्वेन परिणता वर्तते । तस्मादेव वैद्याः चुम्बकलोहं मूलप्रकृतित्वेन विपरिणम्य भस्म सिन्दूरं वा कृत्वा समस्तरोगेषु उपयुंजते । मूलप्रकृतिर्नाम अंगारभस्मैव । तत एव भस्मनः विभूतिरित्यपि नाम युज्यते । एषा शक्तिः जीवलोके निश्चला बाह्याभ्यंतरेंद्रियाणि आकर्षति । तन्त्रेऽस्थापि सा प्राणिनामिंद्रियाणि कर्षति मारयति च ।

राजनीतिकोऽर्थ :- जीवलोके = प्राणिसमुदाये, जीवभूतः=जीविकारूपः, सनातनः=सदा निश्चलः, मम अंश एव=राज्यांगमेव, परिपालनाशाखैव, प्रकृतिस्थानि=प्रजासंबधीनि, मनःषष्ठानि इंद्रियाणि=मनआदींद्रियाणि, कर्षति ।

तात्पर्यम् :- प्रजासु जीविकां यांकांचनालम्ब्य प्रवर्तमाना निश्चला काचन प्रभुताशाखैव प्रजानां मनोरंजिनी सर्वेंद्रियतर्पणी प्रथते ।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ॥८॥

वैज्ञानिकार्थ :- ईश्वरः =(आशु अश्नुते) शीघ्रव्यापिनी विद्युच्छक्तिः, अश्वश्च, शरीरं=देहं, अवाप्नोतीतियदपि = प्राप्नोतीत्येतत्, उत्क्रामतीतिच यद् = ऊर्ध्वं गच्छतीति च यदपि, आशयात्=पुष्पादिस्थानात्, वायुः=मारुतः, गन्धानिव=परिमलानीव, एतानि=वक्ष्यमाणानि श्रोत्रादीनि, गृहीत्वा = आत्मसात्कृत्य, संयाति=गच्छति,

तात्पर्यम् :- शीघ्रव्यापी विद्युद्रूपोऽश्वः शरीरं प्राप्य तत्क्षगमे । ऊर्ध्वगामी वायुः पुष्पादिभ्यः गन्धानिव शोत्रादींद्रियाणि आहृत्य गच्छति ।

राजनीतिकोर्थ :- ईश्वरः=प्रभु, शरीरं यदवाप्नोति=मानवं उपसरतीतियत, उत्क्रामतीतियत्=दूरं गच्छतीतिच यदपि, तदा, वायुः आशयात् गंधानिव, एतानि=वक्ष्यमानानि श्रोत्रादीनि, गृहित्वा=आकृष्य, गच्छति ।

तात्पर्यम्:- प्रजारंजकः राजा प्रजा उपसरन् दूरतो गच्छंश्च तासां दर्शनश्रवणाद्यभेऽपि नयन् गच्छति । तथाच वायुः गंधानिव प्रजानामिंद्रियाणि आकर्षतीतिभावः ॥



श्रीमते हयग्रीवाय नमः।

श्रीमते रामानुजाय नमः।

अस्मदाचार्यपरम्पराभ्यो नमः।

# सदर्थसप्तशती

## जगदाचार्यसिंहासनाधीशः - महाविद्वान्
## श्रीकाञ्ची - प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः

नाथोपज्ञं प्रवृत्ते बहुभिरुपचिते यामुनेयप्रबन्धैः
त्राते सम्यग्यतीन्द्रैरनघसुभगसद्दर्शने ह्यस्मदीये।
आचार्याणां प्रभावान् अथ च तदुदितान् अर्थराशीननर्घान्
प्राज्ञा जिज्ञासमाना इह तु मम कृतौ स्वीयमायुः क्षिपन्तु॥

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।
इत्युक्तियोग्यो ग्रन्थोऽयं श्रीवैष्णवरसायनम्॥

प्राज्ञाः प्राहुरिमं ग्रन्थं श्रीवैष्णवमहानिधिम्।
अर्थानमोघानक्षय्यान् गृहीत्वा भुञ्जतामितः॥

श्रीमद्वरवरमुनिराडवतारात्प्रभृति षट्छतं शरदः।
श्रीदेशिकावतारात्प्रभृति तु तास्सप्तशतमिता विगताः॥

तदिदमुभयं धरित्र्यां सन्तस्सन्ततमिह स्मरन्त्विति मे।
अभिरुचिरेतद्ग्रन्थावतारबीजं हि बोभवीति स्म॥

॥ इत्युपोद्धातः॥



# सदर्थसप्तशत्यां प्रथमं शतकम्



१ नाथोपज्ञं ह्यस्मदीयं दर्शनम् । नाथशब्देन भगवान्नाथमुनिराचार्यवर्यो विवक्षितः । भगवद्यामुनमुनीन्द्रप्रणीते सुप्रसिद्धे स्तोत्ररत्ने प्रथमद्वितीयतृतीयश्लोकैरुपश्लोकितो य स एष नाथमुनिरस्मदीयाचार्यपरम्परायां प्राथमिकः परिगणितः । यद्यपि तस्याप्याचार्यः श्रीशठकोपमुनीन्द्रः प्रथितः, स तु कलियुगोपक्रमेऽवतीर्ण इति ततः परं आचार्यपरम्परा बहुतिथकालावधि उच्छिन्नासीत् । दिव्यसूरिषु चरमस्य श्री परकालमुनीन्द्रस्य कालादनन्तरं श्रीवैष्णवदर्शननिर्वाहकसदाचार्यनामावबोधविरहेण स एष नाथमुनिरेव प्राथमिकः परिगण्यते । परमकारुणिकः परमः पुमान् हार्दतमोनिरसनपुरस्परमदसद्विवेचनात्मकज्ञानप्राचुर्यसंपिपादयिषया श्रीमन्नाथमुनिप्रमुखान् सदाचार्यसार्वभौमान् भौमानाकलय्य तेषामुपदेशैर्दिव्यग्रन्थैरनुष्ठानैरनुप्रापणैश्च जगदिदं समुज्जीवयामासेति, तत्तादृशेष्वाचार्येषु नाथमुनिरेव प्राथमिक इति च विज्ञेयम् ।

२ दक्षिणस्यां दिशि चिदम्बरक्षेत्रप्रान्ते वीरनारायणपुरे कृतावतारस्सोऽयमाचार्यवर्यः स्वस्थाने भगवद्भागवतकैङ्कर्यनिर्वाहधुरंवहस्सन् अध्यात्मशास्त्रप्रवचनपरायणश्च समुल्ललास । अथ कदाचिद्यदृच्छया श्रीशठकोपमुनीन्द्रसहस्रगीत्यन्तर्गतमेकं दशकं श्रीयादवाद्रिप्रान्ततस्समागतस्य कस्यचिद्भक्तप्रवरस्य मुखादाकर्ण्य ततः कृत्स्नदिव्यप्रबन्धसमार्जनसमुत्सुको भूत्वा श्रीशठकोपमुनीन्द्रदिव्यावतारस्थलीं श्रीकुरुकापुरीमुपेत्य तत्रत्यनिर्दिष्टदिव्यतिन्त्रिणीतरुमूले तीव्रं तपस्तप्त्वा, लक्ष्मीनियोगात् व्योम्नः परस्तात्सविधमुपेत्य दिव्यतिन्त्रिणीविटपे निषण्णस्य श्रीशठकोपमुनीद्रस्य मुखादधिगतसमीहितसर्वस्वः तत्रैव कुरुकापुर्यां कतिपयवत्सरान् सुसुखं निवसन् तत्रत्यान्

श्रीवैष्णवान् द्राविडाम्नायसागरपारंगतान् विरचय्य, अथ क्रमशो दिव्यदेशानासेवमानस्तत्र तत्र दिव्यप्रबन्धामृतवर्षुकश्च सन् मार्गक्रमेण निजं धाम समाजगाम।

३. नवनिधिवदुपलब्धान् दिव्यप्रबधांस्तान् शतमुखप्रचारभासुरान् कर्तुमुत्सहमानो नाथमुनिर्भगवदाज्ञामुपलभ्य स्वकीयौ भागिनेयावुभौ कुशलवाविव कुशीलवौ दिव्यप्रबन्धगाननिष्णातावारचय्य द्रामिडीं जगतीमशेषां दिव्यप्रबन्धगानमयीमचकलत। संस्कृतवेदस्य वेदव्यासो भगवानिव द्राविडब्रह्मसंहिताया असौ नाथमुनिरिति विश्वतः पप्रथे।

४. न्यायतत्त्वनामकं प्रबन्धरत्नं श्रीमता नाथमुनेनाऽनेन प्रणीतं प्रचक्षते। सा च कृतिरिदानीं नोपलभ्यते, लुप्तेत्याहुः। ग्रन्थस्य तस्य मुखपद्यमात्रमेकमुपलभ्यते * यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः। तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे॥ * इति। श्रीमन्निगमान्तमहागुरुकालपर्यन्तमेष ग्रन्थः प्रचारेऽवर्ततेति न्यायसिद्धाञ्जनादिग्रन्थतोऽवगम्यते॥

५. * लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिनां वराय * इति स्तोत्ररत्ने भगवद्यामुनार्योक्तरीत्या सोऽयमाचार्यवरश्चिरं योगनिष्णातो विरराज। "कुरुकैकावलप्पन्" इति नाम्ना प्रसिद्धमन्तेवासिप्रवरं योगरहस्याभ्यासकृत्ये नियुज्य तस्मा उपदिदेश नाथमुनिः परमया कृपयाऽष्टाङ्गयोगक्रमम्। स च क्रमः परम्परया न प्रचलित इति कथा महतां मुखतो वेदितव्या।

६. श्रीमतो नाथमुनेरन्तेवासिषु बहुष्वग्रेसरः पुण्डरीकाक्षगुरुवरः। तस्यैव भाषानाम उय्यक्कोण्डारिति। सोऽयं नाथमुनिकटाक्षसंधुक्षितसकलार्थतत्त्वविज्ञानभूमा दिव्यप्रबन्धप्रवचनप्रवणो वेदान्तार्थप्रवचनप्रवीणश्च सन् दर्शनप्रवर्तनधुरन्धरो

विरराज । एतस्य च शिष्येषु मणक्कालनम्बीति प्रसिद्धः श्रीराममिश्रगुरुः प्रधानान्तेवासिपदवीमवजगाहे सोऽयं पुण्डरीकाक्षगुरुवरचरणारविन्दपरिसरे द्वादश शरदो निरन्तरपरिचर्याः प्रकलयन् अन्तरंगसेवक आसीदिति प्रथा पप्रकाशे । श्रीनाथमुनिः प्रागेव प्रोक्तवानासीत् मम पौत्रो महामेधावी प्रादुर्भविष्यतीति । सोऽयमेव यामुनाचार्यनाम्ना प्रसिद्धो गुरुसार्वभौमः । तस्मा अर्थविशेषानुपदेष्टुमाज्ञापित आसीत्पुण्डरीकाक्षगुरुवरः । सोऽपि मनोरथानामतटान्प्रवाहानभिवर्धयन्नासीत् । परंतु विधिवशात् अपूर्णमनोरथ एव परमपदमवजगाहे; तदात्वे स्वान्तेवासिनं श्रीराममिश्रम् आदिष्टवानासीत स्वाचार्यपौत्राय भविष्यते दर्शनार्थानुपदेष्टुम् ।

७. दर्शननिर्वाहधुरन्धरपदवीमधितिष्ठन् श्रीराममिश्रगुरुः श्रीमन्नाथमुनेरात्मजस्य श्रीमदीश्वरभट्टाचार्यस्य दिव्यपुत्रजन्मोत्सवस्समभूदिति समाकर्ण्य हर्षप्रकर्षभरितान्तरङ्गस्तत्र समागत्य जातकर्मनामकर्मणी यथाविधि विरचय्य गुरुवरनियोगानुरोधेन यामुनाचार्यनाम्ना तं दिव्यशिशुं समस्कुरुत । श्रीगोदादेवीप्रबन्धे तिरुप्पावै नाम्नि पञ्चम्यां गाथायां "यमुनैत्तुरैवन्" इति नाम्ना श्रीकृष्णो भगवान् व्यपदिदिशे खलु । तदेव नाम शिशुरत्नस्यास्य प्रसिध्यति स्म । स एष दिव्यशिशुः शुक्लपक्षेन्दुवदहरहरभिवर्धमानः अन्नप्राशनचौलोपनयनादिसंस्कारान् यथाविधि यथाकालं लंभितो महामेधावी सांगोपांगवेदाध्ययनसम्पन्निधिर्भूत्वा बाल्य एव विपश्चिदपश्चिमः पप्रथे ।

८. भगवद्यामुनाचार्यस्य प्रभावो वाचामभूमिः, तथाऽपि संक्षेपेण प्रकीर्त्यते । कारणविशेषतो गुरुवरेणानेन श्लोकद्वितयं प्रख्यापयितव्यमासीद्राजसंसदि । तदेवम् । "आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात् आरक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः । आ च प्राच्यप्रतीच्यक्षितिधरयुगलात्सूर्यचन्द्रावतंसात् मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥ " " न वयं कवयस्तु केवलं न

न वय केवलतन्त्रशरणाः । अपि च प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः॥" इति । एतेन सर्वं व्याख्यानम् । गुरुवरेणानेन राजपरिषदि विजयशालिना बभूवे । * आळवन्दारिति भाषानाम च ततः प्रभृत्येव प्रथते स्म। अदसीयपाण्डित्यप्रकर्ष-प्रसन्नहृदयेन चोलभूपतिना यौवराज्याभिषेकश्चास्य क्रियते स्म । तदेतत् एतदीय-गुरुवरस्य श्रीराममिश्रस्य स्तुतिपद्येन सुगमम् । तद्यथा- "अयत्नतो यामुनमात्मदासम् अलर्कपत्रार्पणनिष्क्रयेण। यः क्रीतवान् आस्थितयौवराज्य नमामि तं राममेयमत्वम्" इति । अर्धराज्यमदायीति प्रथितम् ।

९. श्रीयामुनाचार्यस्य परिपाकभूमानमवगतवता भगवता राममिश्रेण गुरु-वरेण स्वाचार्यनिदेशानुरोधेन तस्मै दर्शनार्थोपदेशसमुत्कण्ठितेन संबभूवे । समाजग्मे च तदवलोकयिषया । राजद्वारे दौवारिकैः प्रतिरुद्धान्तर्गमनस्य तस्य समघटत सदुपायविशेषेण यामुनार्यसंदर्शनम् । यामुनार्यस्तु राममिश्रस्य तेजसा विलक्षणेन विवशीकृतः साष्टांगं प्रणिपत्य तत्समीहितं चावगत्य ततःप्रभृत्येव दिव्यप्रबन्धग्रहणेन सह दर्शनार्थरत्नानि मत्तेनमुपाचक्रमे। अचिरेणैव समधिगतसर्वार्थबृन्दः श्रीरंगनाथसेवां च समुपलब्धितो विरक्तिभूम्ना स्वीकृततुर्याश्रमः सरोमुनिप्रभृतिपरकालसूरिपर्यन्त-सकलदिव्यसूरिमङ्गलाशासनसमेधितप्रभावं श्रीरङ्गक्षेत्रमेवाधिवसन् दर्शननिर्वाहधूर्वह-स्समुल्लास ।

१०. तस्यैतस्य गुरुसार्वभौमस्य यामुनार्यस्य बहवः शिष्या अभूवन् ; तेषु महापूर्णगुरुः, गोष्ठीपूर्णगुरुः, श्रीशैलपूर्णगुरुः, श्रीमालाधरगुरुः, श्रीरंगेशविज्ञप्तिकरः, श्रीकांचीपूर्णमिश्रः इत्याद्याः परिगणनीयाः पप्रथिरे । भगवद्रामानुजमुनीन्द्रस्य श्रीयामुनार्यपदकमलसंश्रयणसमुत्कण्ठितस्य स्थितस्यापि दैववशान्न जघटे तत् । ततश्च तच्छिष्यवर्गसकाशादेव प्राप्तपञ्चसंस्कारादिकस्समधिगतसर्वार्थसर्वस्वश्च सन्

दीपादुत्पन्नप्रदीपनिर्विशेषस्सर्वातिशायिमहिमा समिन्धानविमलविपुलयशाः प्रचकाशे। नव रत्नानि वा नव निधयो वेति विकल्पनार्हान् नव दिव्यग्रन्थाननुगृहीतवताऽनेन भगवता भाष्यकृता अखिलतमःकशीनमास्माकं दर्शनं सम्यगेव परित्रातम् ॥

११. भगवान् यामुनाचार्यः सकलशास्त्रसागरपारदृश्वा सिद्धित्रयादिप्रबन्धरत्नपणेता शारीरकमीमांसाभाष्यं कुतो न निर्ममे ? इति बहवः पृच्छन्ति । सत्यं प्रष्टव्यमेवैतत् । श्रूयताम् । ऋषेर्हृदयं नानृषिर्वेदितुमलम् । बोधायनो महर्षिः शारीरकमीमांसार्थावबोधकं वृत्तिग्रन्थं व्यरचयदिति. स च ग्रन्थः काश्मीरमण्डले वर्तत इति च तदात्वे प्रसिद्धमासीत् । तत्सम्पादनवैयग्री समजनि यामुनाचार्याणाम् । परन्तु तदार्जनसौकर्यं न समघटत तेषाम् । शिष्यमण्डलीपरिवृत्तस्य नानासौकर्यसंपन्नस्य च भगवद्रामानुजार्यस्य तत्सौकर्यं संजघटे । मेधाप्रतिभादिमहोदधिना स्वान्तेवासिना श्रीवत्साङ्कमिश्रगुरुवरेण अन्यैश्च भूयोभिः शिष्यवर्गैस्समेतो भगवान् रामानुजार्यः काश्मीरमण्डलमुपेत्य, तत्रत्यशारदापीठमप्यधिगत्य तत्र स्थितं वृत्तिग्रन्थमपि कटाक्षयितुमवकाशमलभतेति चरित्रसंक्षेपः ।

१२. श्रीकूरनाथापराभिधानः श्रीवत्साङ्कमिश्रगुरुः बोधायनवृत्तिग्रन्थं समग्रं हृदि धारयामास स्वकीयमेधाबलेनेति पुराविदः । अत एव तत्सहयोगेन संधुक्षितोत्साहो भगवान् रामानुजाचार्यः ब्रह्मसूत्रभाष्यमरचयत । तथा च श्रीभाष्योपक्रमपंक्तिरेषा — "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति । एतेन बोधायन-टङ्कद्रमिडगुहदेवप्रभृतिपूर्वाचार्यव्याख्यानुगुणं भाष्यं श्रीभाष्यमेवेति सुगमम् । अत्रोपनतानि चोद्यानि परिहृतान्यस्माभिः शांकरशिरोभूषायामिति नात्र विस्तरः । अथ श्रीभगवद्रामानुजदर्शनसारार्थजिज्ञासुसात्त्विकसज्जनमहोपकारकान् विषयानिहोपहरामः ।

१३. ब्राह्मणा वयं वेदधनाः कथ्यामहे । वेदो हि नः परमं प्रमाणम् । प्रमाकरणं प्रमाणम् । प्रमा नाम यथार्थज्ञानम् । तथा च यथार्थज्ञानसाधनं यत् तत्प्रमाणमित्युक्तं भवति । * प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ " इति प्राहुः प्राज्ञाः । वेदप्रामाण्य वादिनो वैदिकाः प्रोच्यन्ते । वेदप्रामाण्यमभ्युपगम्यापि वेदार्थानां यथायथं प्रतिपादनमकुर्वन्तः अभिनिवेशवशात् वेदविरुद्धार्थप्रतिपादका ये ते कुदृष्टयः कुदृश इति वा कथ्यन्ते । सर्वथा वेदप्रामाण्यानभ्युपगन्तारो बाह्या इत्यभिधीयन्ते ।

१४. आप्तानामग्रणीर्मनुमहर्षिरेवमाह – "या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टयः, तास्सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ " इति वेदम् अप्रमाणमाचक्षाणाश्चार्वाकजैनबौद्धादयो बाह्या वेदितव्याः । वेदः परम-प्रमाणमेवेत्यूरीकृत्यापि "गुणशून्यं ब्रह्म, अलक्ष्मीकं ब्रह्म, अशरीरं ब्रह्म, अपरि-वारकं ब्रह्म" इत्यादि स्वैरमभिदधानाः परे कुदृष्टयो वेदितव्याः । एवं च वेदस्य अप्रामाण्यवादिन इव तत्प्रामाण्यवादिनः परेऽपि हेया इति सिध्यति ।

१५. तदिदमाह भगवान् श्रीवत्साङ्कमिश्रगुरुवरः स्वकीये श्रीवैकुण्ठस्तवे – "बाह्याः कुदृष्टय इति द्वितयेऽप्यपारं घोरं तमस्समुपयान्ति न हीक्षसे तान् । जग्धस्य काननमृगैर्मृगतृष्णिकेप्सोः कासारसत्त्वनिहतस्य च को विशेषः " इति । अय भावः - पिपासातिरेकतः पानीयमन्विष्य प्रधावत उभौ मृगौ; तयोरन्यतरो मरीचिकाभ्रमा सुदूरमाकृष्टः केनचन शरारुणा शार्दूलेन प्रसभमवस्कन्द्य भक्षितोऽभत । अपरस्तु मृगो यथावत्तटाकमेवावजगाहे । परन्तु अस्थाने न्यस्तपदस्सन् तत्रत्येन ग्राहेण गृहीतो जग्धो बभूव । एनयोः प्रथमस्य मृगस्य पानीयनिधा-वनवतारः, द्वितीयस्य तु तत्रावतार इति विशेषसद्भावेऽपि प्राणात्यये द्वयोरपि

ह्यविशेषः। एवं बाह्यानां वेदेऽनवतारः, कुदृशां वेदे प्रवेश इति विशेषसद्भावेऽपि अधोगतौ तावदविशेष एवेति।

१६. सन्तु ते बाह्याः कुदृशश्च हन्त! श्रुतिसागरे यथायथमवगाह्य सुशोभनान् अनर्घ्यरत्नानर्थाननुभूय हृष्यन्तो वयं धन्यधन्यास्स्मः। वयं तावदुभय-वेदान्तप्रवर्तकविरुदभागिनस्स्मः। संस्कृतवेदमिव द्राविडवेदमपि परमप्रमाणमभ्युपेमः। संस्कृतवेदः संस्कृतवेदान्त इति पर्यायं भजताम् तथा द्राविडवेदो द्राविडवेदान्त इति च वेदान्तशब्दो हि वेदशिरोभाग इत्यर्थमिव वेदसिद्धान्त इत्यर्थमप्यभिधातुमलम्। तथा च उभयवेदसिद्धान्तप्रवर्तका इत्यप्युक्तं भवति। संस्कृतवेदसिद्धान्तान्नातिरिच्यते द्राविडवेदसिद्धान्तः। तथाऽपि द्राविडवेदे तत्त्वहितपुरुषार्थादिप्रतिपादनप्रणाल्यां वैशद्यमतिशयितमिति हेतुना अस्मदीयाः पूर्वाचार्या अत्र विशिष्याभिनिविशन्ते स्म। अत्र विस्तरः परस्ताद्भविता। संप्रति संस्कृतवेदान्तमधिकृत्य प्रपञ्चयामः।

१७. वेदः कर्मकाण्डब्रह्मकाण्डभिदया द्वेधा विभागमश्नुते। वेदस्य पूर्वो भागः कर्मकाण्डप्रथां विन्दति। ऊर्ध्वो भागो ब्रह्मकाण्डप्रथाम्। उपनिषदामेव ब्रह्मकाण्डसंज्ञा प्रथिता। भगवदाराधनात्मकयज्ञादिकर्मविशेषान् विस्तरेण प्रतिपादयन् वेदभागः कर्मकाण्डपदाभिलप्यः। कर्मविशेषैस्तैस्तैराराध्यमानस्य श्रीमतः परमपुरुषस्य स्वरूपरूपगुणादिकं विस्तरतः प्रतिपादयन् वेदभागो ब्रह्मकाण्डपदवाच्यः। उपनिषदिति नामान्तरेणापि स प्रथत इति पुनरुक्तम्। उपनिषीदन्तीत्युपनिषत्। भगवतस्समीपे निषीदन्तीत्यर्थः। "वेदैश्च सर्वैरहमेव वेद्य" इति गीतोक्तरीत्या कर्मकाण्डस्यापि परमपुरुषप्रतिपादनपरत्वे सत्यपि तस्मिन्प्रतिपादने व्यवधानमस्ति नाम। ब्रह्मकाण्डस्य तु न तथेति उपनिषच्छब्दार्थसौष्ठवमवधेयम्।

# Samskrita Bhasha Pracharini Sabha, Chittoor.

Income and Expenditure Statement for the Year Ending 31st March, 1965.

## EXPENDITURE

| | | |
|---|---|---|
| To opening stock of Books | | 16,509 57 |
| ,, Cost of Papers & Printing charges for publication of books | | 682 03 |
| ,, Purchase of books | | 112 15 |
| ,, Cost of Job Printing & Question papers | | 349 10 |
| ,, Cost of Subscription for daily News Papers and Cost of books purchased for liberary | | 167 84 |
| ,, Bank and Money order Commissions & Telegrams | | 17 84 |
| ,, Salary for maintaining free school | | 300 00 |
| ,, Salary for libererain and Building maintenance | | 436 27 |
| ,, Conveyence Charges | | 83 73 |
| ,, Meeting and Aniversary expenses | | 97 24 |
| ,, Rubber stamps | | 3 27 |
| ,, Stationery and General Expences | | [illegible]30 51 |
| ,, Cost of Gairwani Magazine:— | | |
| ,, Salary to Editor M. Varadarajapantulu | 1800 00 | |
| ,, Salary to Sub-Editor K. V. Raghavan | 1200 00 | |
| ,, Salary to Clerk E. Sundararajamachari | 360 00 | |

| | | | | | |
|---|---|---|---|---|---|
| ,, Salary to peon Krishniah Naidu | 360 | 00 | | | |
| To Postage for sending copies of Girvani | 170 | 26 | | | |
| ,, Printing charges | 880 | 25 | | | |
| ,, Cost of Paper Purchased for Magzine | 1,289 | 01 | | | |
| ,, Cost of Blocks | 58 | 50 | | | |
| ,, Cost of General charges | 33 | 63 | | | |
| ,, Conveyance charges for Publicity | 27 | 35 | | | |
| | | | | 6,178 | 99 |
| ,, Remuneration paid to Pracharaks:— | | | | | |
| 1. N. Subbraya Sastri | | 1,200 | 00 | | |
| 2. T. K. Thiruvengada-charyulu | | 1,200 | 00 | | |
| | | | | 2,400 | 00 |
| ,, Remuneration paid to Suptintendents | | 347 | 40 | | |
| ,, Remuneration paid to Examiners | | 298 | 90 | | |
| ,, Remuneration paid to Pandits | | 50 | 00 | | |
| | | | | 696 | 30 |
| ,, Postage | | | | 919 | 88 |
| ,, Cost of presentation Books | | | | 269 | 08 |
| ,, Grant Returned to A. P. Government under Prizes Head | | | | 600 | 00 |
| | | | | 34,938 | 68 |

## INCOME

| | | |
|---|---|---|
| By Sale of Books | Rs. | 3,373 03 |
| ,, Subscription from members | | 59 50 |
| ,, Subscription from Gairvani | | .585 30 |
| ,, Subscription for Liberary | | 35 00 |
| ,, Examination fee | | 2,229 00 |
| ,, Interereest receipts | | 49 03 |
| ,, Donations | | 9,051 18 |
| , Grant for Gairwani Magazine | | — |
| ,. Closing stock of Books | | 17,422 08 |
| ,, Suspence Account | | 61 69 |
| ,, Donation for Building Construction | | 2,072 87 |
| | Rs. | 34,938 68 |

## Balance Sheet as on 31st March, 1965

### LIABILITIES :—

| | | |
|---|---|---|
| Sundry Creditors | | 6,619 52 |
| Capital account:— | | |
| Balance B/f- | 48,107 24 | |
| Add:–Excess of Income Over Expenditure of the year | 4,985 38 | |
| | | 53,092 62 |
| Difference in books | | 157 87 |
| | | Rs. 59.870–01 |

ASSETS:-

| | | |
|---|---|---|
| Cash on hand | | 641 19 |
| Cash at Banks:- | | |
| The Co-operative Town Bank:- | | |
| in S. D. 3079 | 1,001 00 | |
| S. D. 3386 | 79 04 | |
| S. D. 1938 | 308 08 | |
| C. D. 2941 | | |
| Building Fund | 2,291 60 | |
| | | 3,679 72 |
| Fixed Deposits in Co-Operative Town Bank Ltd., Chittoor | | 1,232 00 |
| Cost of Building Including repairs and construction etc. | | 30,520 83 |
| Furniture | | 1,035 07 |
| Cost of Liberary Books in Stock | | 3,785 54 |
| Closing stock of Books | | 17,422 08 |
| Sundry debtors | | 1,553 58 |
| | | Rs. 59,870 01 |

## AUDIT REPORT.

We have gone through the accounts maintained by the Samskritha Basha Pracharani Sabha, Chittoor, They are well maintained. The Income and Expenditure Statement and the Balance Sheet are prepared in accordance with the books maintained and they are found correct.

Chittoor.
Dt. 23—12—67

*for Associated Auditors*
K. Harikrishnan
Partner.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

Income and Expenditure Statement for the Year Ending 31st March, 1966.

## EXPENDITURE

| | | |
|---|---|---|
| To opening stock of Books | | 17422, 08 |
| ,, Cost of Papers & Printing charges for publication of books | | 330 66 |
| ,, Purchase of books | | 244 44 |
| ,, Cost of Job Printing & Question papers | | 348 60 |
| ,, Subscription for daily News paper etc | | 454 30 |
| ,, Bank and Money order Commissions & Telegrams | | 11 68 |
| ,, Salary for maintaining free school | | 321 00 |
| ,, Salary for libererain and Building maintenance | | 468 41 |
| ,, Conveyence Charges | | 33 79 |
| ,, Meeting and expenses | | 17 00 |
| ,, Rubber stamps | | 3 00 |
| ,, Stationery and General Expences | | 120 63 |
| ,, Nagapattnam branch maintaining charges | | 10 50 |
| ,, Cost of Gairwani Magazine:— | | |
| ,, Salary to Editor M. Varadarajapantulu | 1800 00 | |
| ,, Salary to Sub-Editor K. V. Raghavan | 1420 00 | |
| ,, Salary to Clerk E. Sundararajamachari | 360 00 | |

ASSETS:-

| | | |
|---|---|---|
| Cash on hand | | 4,077 36 |
| Cash at Bank:- | | — |
| The Co-operative Town Bank:– | | |
| in S. D. 3079 | 1,350 00 | |
| S. D. 3386 | 81 41 | |
| S. D. 1938 | 311 48 | |
| C. D. 2941 (building fund) | 312 45 | |
| Fixed Deposits in Co-Operative Town Bank Ltd., Chittoor | | 4,232 00 |
| Cost of Building Including repairs and construction etc. | | 30,520 83 |
| Furniture | | 1,035 07 |
| Cost of Liberary Books in Stock | | 3,785 54 |
| Closing stock of Books | | 13,621 79 |
| Sundry debtors | | 1,509 02 |
| | Rs. | 60,836 97 |

## AUDIT REPORT.

We have gone through the accounts maintained by the Samskritha Basha Pracharani Sabha, Chittoor, They are well maintained. The Income and Expenditure Statement and the Balance Sheet are prepared in accordance with the books maintained and they are found correct.

Chittoor.

Dt. 23—12—67

*for Associated Auditors*

K. Harikrishnan

Partner.

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

## प्लवङ्गोत्तरायणपरीक्षणां नियमाः

MARCH EXAMINATIONS

| विना विलम्बशुल्कं आवेदन पत्राणां प्रापणांतिमतिथिः | प्रत्येकं 50 पैसा विलम्बशुल्केनसह आवेदनपत्राणां प्रेषणांतिमतिथिः | परीक्षातिथयः मार्चमासे |
|---|---|---|
| 20-1-1968 | 31-1-1968 | 9, 10, 11 |

चित्तरु,
1—1—68.

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R C No. 27-A /65 Date 14—7—65

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिके



विंष भुङ्क्ष्व महाराज स्वजनैः परिवारितः ।
विना केन विना नाभ्यां कृष्णाजिनमकंटकम् ॥

अर्थः — विंष = षकाररहितं, केन विना = ककारेण विना, नाभ्यां विना = नकारद्वयं विना, कृष्णाजिनं = राज्यम् (कृष्णाजिनपदे षकणनवर्णलोपे ऋ + आजि + अम् इति भूत्वा यणादेशेन राज्यं इति भवनि) अकंटकं = निरुपद्रवं, भुङ्क्ष्व ।

गोगजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नजशत्रोः ।
वाहनवैरिकृतासनजुष्टा त्वामिह पातु जगत्त्रयतुष्टा ॥

अर्थः — गोगः शिवः, तज्जः स्कन्दः, तस्य वाहनम् मयूरः, तस्य भोजनं सर्पः, तस्य भक्ष्यं वायुः, तदुद्भूतः हनूमान्, तं पातीति तत्पः सुग्रीवः, तस्य मित्रं रामः, तस्य सपत्नः रावणः, तज्जः इन्द्रजित्, तस्य शत्रोः इन्द्रस्य, वाहनं = ऐरावतः, तस्य वैरी सिंहः, तत्र कृतं आसनं जुषतीति तथोक्ता सिंहासना, जगत्त्रये तुष्टा कलिका त्वां पातु ।



Published by Sri N. Ramanatha Iyer. B A., B L., Advocate &
Secretary S. B. P. Sabha, Chittoor. ( A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor. (A. P.) C. 1500.